# विश्वकर्म पूजा

(कलश, दियो, गणेश पूजा गरेर प्राणप्रतिष्ठा गर्ने)

## अङ्गन्यास

(अङ्गन्यास गर्ने)

ॐ वां हृदयाय नमः । ॐ वीं शिरसे स्वाहा । ॐ वूं शिखायै वषट् । ॐ वैं कवचाय हुम् । ॐ वौं नेत्रत्रयाय वौषट् । ॐ वः अस्त्राय फट् । ॐ वां अंगुष्ठाभ्यां नमः । ॐ वीं तर्जनीयां नमः । ॐ वूं मध्यमाभ्यां नमः । ॐ वैं अनामिकाभ्यां नमः । ॐ वौं कनिष्ठिकाभ्यां नमः । ॐ वः करतलकरपृष्ठाभ्यां फट् ।

## तत्रादौ विनियोग

(विनियोग गर्ने)

अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्माविष्णुमहेश्वरा ऋषयः, ऋग्यजुः सामाथर्वणः छन्दांसि, चैतन्यरूपा अपरा प्राणशक्तिर्देवता, आं बीजं, ह्रीं शक्तिः, क्रों कीलकम्, श्रीविश्वकर्मदेवस्य प्राणप्रतिष्ठापने विनियोगः ।

## करन्यासः

(करन्यास गर्ने)

१- ॐ आं ह्रीं क्रों अं कं खं गं घं ङं क्रों ह्रीं आं पृथिव्यप्तेजोवाय्याकाशात्मने आं अंगुष्ठाभ्यां नमः । २ – ॐ आं ह्रीं क्रों इं चं छं जं झं ञं क्रों ह्रीं आं शब्दस्पर्शरस–गन्धात्मने ईं तर्जनीभ्यां नमः । ३– ॐ आं ह्रीं क्रों उं टं ठं डं ढं णं क्रों ह्रीं आं श्रोत्रत्वक्-चक्षुर्जिह्वा–प्राणात्मने ऊं मध्यमाभ्यां नमः । ४– ॐ आं ह्रीं क्रों एं तं थं दं धं नं क्रों ह्रीं आं वाकपाणिपादा पायूपस्थाने ऐं अनामिकाभ्यां नमः । ५- ॐ आं ह्रीं क्रों ओं पं फं बं भं मं क्रों ह्रीं आं वचनादानगति - विसर्गानन्दात्मने औं कनिष्ठिकाभ्यां नमः । ६- ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं क्रों ह्रीं आं मनोऽहंकारचित्तविज्ञानात्मने अः करतलकरपृष्ठाभ्यां नमः ।

## प्राणप्रतिष्ठा

(प्राणप्रतिष्ठा गर्ने)

ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अं अः क्रों ह्रीं आं श्रीविश्वकर्मदेवस्य इह प्राणा इह प्राणाः ।
ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अं अः क्रों ह्रीं आं श्रीविश्वकर्मदेवस्य जीव इह स्थितः ।
ॐ आं ह्रीं क्रों अं यं रं लं वं शं षं सं हं क्षं अं अः क्रों ह्रीं आं श्रीविश्वकर्मदेवस्य सर्वेन्द्रियाणि
वाङ-मनः त्वक्-चक्षुः श्रोत्र-जिह्वा-घ्राण-पाणिपादापायूपस्था इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।

## ध्यानम्

(ध्यान गर्ने)

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः,
पाशंकोदण्डमिक्षूद्भवगुणमणि-मप्यंकुशं पञ्चबाणान् ।
बभ्राणस्रक्कपालं त्रिनयनलसितापीनवक्षेरुहाढ्यां,
देवीबालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परान्नः ॥

## प्रतिष्ठा

(पुनः प्रतिष्ठा गर्ने)

ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञ ७ समिमं दधातु । विश्वेदेवा स इह मादयन्तामों ३ प्रतिष्ठ ॥ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्वमर्चायै मामहेति च कश्चन स्वाहा । अस्मिन् कलशे (वेद्यां वा) श्रीविश्वकर्मन् ! सुप्रतिष्ठितो वरदो भव ।

## ध्यानम्

(ध्यान गर्ने)

ॐ दशपाल महावीर ! सुचित्रकर्मकारक । विश्वकृत् विश्वधृक् च त्वं वसना मानदण्डधृक् ॥ भो विश्वकर्मन् ! इहागच्छ इह तिष्ठ, अत्राधिष्ठानं कुरु कुरु मम पूजां गृहाण ।

## आवाहनम्

(आवाहन गर्ने)

आवाहयामि देवशं विश्वकर्माणमीश्वरम् । मूर्त्ताऽमूर्तकरं देवं सर्वकर्त्तारमद्भुतम् ॥
त्रैलोक्य-सूत्रकर्त्तारं द्विभुजं विश्वदर्शितम् । आगच्छ विश्वकर्मस्त्वं यज्ञेऽस्मिन् सन्निधो भव ॥

## आसनम्

(कुश राख्ने)

सुवर्णरचितं देव ! दिव्यास्तरणशोभितम् । आसनं हि मया दत्तं गृहाणाङ्गिरसो सुत ! ॥

## पाद्यम्

(जल चढाउने)

इदं पाद्यं मया दत्तं सर्वसौगन्धसंयुतम् । गृहीत्वा विश्वकर्मेश प्रसन्नो भव वास्तुज ! ॥
दिव्यौषधिरसोपेतं गन्ध-पुष्पाऽक्षतैः सह । गृहाणाऽर्घ्यं मया दत्तं विश्वकर्मन् कृपां कुरु ॥

## आचमनीयम्

(जल चढाउने)

सुगन्धवासितं दिव्यं निर्मलं सलिलं विभो । गृहाणाऽऽचमनं सौ꠰꠰े ! विश्वकर्मन् ! कृपां कुरु ॥

## मधुपर्कम्

(मह, दही, घ्यू मिसाएर चढाउने)

नमो देवाय भद्राय गृहनिर्माणशालिने ! । मधुपर्कं गृहाणेदं विश्वकर्मन् सुधोपमम् ॥

## पञ्चामृतम्

(पञ्चामृत चढाउने)

पञ्चामृतं मयाऽऽनीतं पयो दधि घृतं मधु । शुद्धं शर्करया युक्तं विश्वकर्मन् ! प्रतिगृह्यताम् ॥

## गंगाजलम्

(पञ्चामृत चढाउने)

गंगाजलं समानीतं सर्वपापहरं शुभम् । पूतं पयोऽथवा दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥

## यज्ञोपवीतम् – वस्त्रम्

(जनै र कपडा चढाउने)

स्वदेशनिर्मितं वस्त्रं खद्दरं पावनं परम् । शरीराच्छादनार्थाय गृह्यतां सूत्रवर्द्धन ! ॥
नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं मया दत्तं गृह्यतां धर्मनन्दन ! ॥

## आभूषणानि
(गहनाहरू चढाउने)

शिरस्कं कुण्डलं हारं सोत्तरीयं तथैव च । अलंकारं प्रगृह्याऽत्र विश्वकर्मन् ! प्रसीद वै ॥
श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं विधानज्ञ ! गृह्यतां चन्दनं शुभम् ॥

## अक्षता
(अक्षता चढाउने)

अक्षताश्च कलानाथ ! कुङ्कुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण वास्तुनन्दन ! ॥

## पुष्पमालाम्
(माला चढाउने)

मल्लिकादि सुगन्धीनि मालत्यादीनि वै विभो ! । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥
सौरभाणि सुमाल्यानि सुपुष्प - रचितानि वै । मया निवेदितान्यत्र शिल्पाचार्य ! सुगृह्यताम् ॥

## तुलसीपत्राणि, विल्वपत्राणि
(तुलसी, विल्वपत्र चढाउने)

कोमलानि सुगन्धीनि मञ्जरी – संयुतानि च । तुलस्याः सदलान्यद्य विश्वकर्मन् ! प्रगृह्यताम् ॥
त्रिदलैर्बिल्वपत्रैश्च कोमलैः शङ्करप्रियैः । तव पूजां करिष्यामि प्रसीद शिल्पिनाम्बर ! ॥

## धूपम्
(धूप बाल्ने)

वनस्पति-रसोद्भूतं सुगन्धाढ्यं मनोहरम् । धूपं गृहाण कर्मेश ! द्रुतकर्म परायण ! ॥

## दीपम्
(बत्ती बाल्ने)

घृतवर्ति-समायुक्तं कर्पूरादि-समन्वितम् । दीपं गृहाण देवेश ! ह्यन्धकार-विनाशकम् ॥

## नैवेद्यम्
(नैवेद्य चढाउने)

पुप-मोदक-संयाव-पयः पक्वादिकं वरम् । निर्मितं बहुसत्कारैर्नैवेद्यं प्रतिगृह्यताम् ॥

## शुद्धोदकेन
(शुद्ध जल चढाउने)

शीतलं स्वादु शुद्धं च तृषा-तृप्तिकरं जलम् । सर्वदैव स्वतृप्त्यर्थं विश्वकर्मन् ! प्रगृह्यताम् ॥
सर्वौषधिरसोपेतं पवित्र सरिता-जलम् । आचम्यं च मया दत्तं गृहाण देवताप्रिय ! ॥

## फलम् नैवेद्यम्
(फलफूल नैवेद्य चढाउने)

इदं फलं मया देव ! स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥

## ताम्बूलम्
(पान मसला चढाउने)

ताम्बूलं पूगसंयुक्तं चूर्णं खादिर-संयुतम् । लवङ्गादियुतं देव ! गृह्यतां ब्रह्म-वंशजः ! ॥

## दक्षिणा द्रव्यम्

(द्रव्य चढाउने)

हिरण्यगर्भ-गर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

## हवनम्

(घ्यू हवन गर्ने)

ॐ प्रजापतये स्वाहा, इदं प्रजापतये न मम । ॐ इन्द्राय स्वाहा, इदं इन्द्राय न मम । ॐ अग्नये स्वाहा, इदमग्नये न मम । ॐ सोमाय स्वाहा, इदं सोमाय न मम । ॐ भूः स्वाहा, इदमग्नये न मम । ॐ भूवः स्वाहा, इदं वायवे न मम । ॐ स्वः स्वाहा, इदं सूर्याय न मम । एताः सप्त – महाव्याहृतयः (घृताहुतिः) ।

ततोऽअग्निस्थापनोक्तं उत्तराङ्ग होम समाप्य (अग्निस्थापना अनुसार गर्ने)

## चरु हवनम्

(चरु हवन गर्ने)

ॐ विश्वकर्मणे नमः स्वाहा । ॐ सूर्याय नमः स्वाहा, चन्द्रमसे नमः स्वाहा, भौमाय नमः स्वाहा, बुधाय नमः स्वाहा, गुरवे नमः स्वाहा, शुक्राय नमः स्वाहा, शनैश्चराय नमः स्वाहा, राहवे नमः स्वाहा, केतुभ्यो नमः स्वाहा, पञ्चलोकपालेभ्यो नमः स्वाहा, दशदिक्पालेभ्यो नमः स्वाहा, इष्टदेवेभ्यो नमः स्वाहा, कुलदेवेभ्यो नमः स्वाहा, ग्रामदेवेभ्यो नमः स्वाहा, सर्वेभ्यो देवेभ्यो नमः स्वाहा, सर्वाभ्यो देवीभ्यो नमः स्वाहा ।

## पूर्णपात्रादिदानम् विसर्जनञ्च

(पूर्णपात्र, दक्षिणा दान गरी विसर्जन गर्ने)

ततः पूर्णपात्रं, ब्राह्मणेभ्यो दक्षिणां च दत्वा यान्तुदेवेति देवान् विसृज्य, कायेन वाचेति कर्मेश्वरार्पणं कृत्वा कर्म समापयेत् ।



॥ इति विश्वकर्म पूजा ॥